ओं
श्रीगुरुभ्यो नमः

# जीवयात्रा - ஜீவயாத்ரா

(ज्ञानानन्द भारतीकृता - ஞாநாநந்த பாரதீக்ருதா)

नित्यानन्दसुखं पदं सुविमलं प्राप्तुं समीहायुताः
सर्वे जन्मभृतः सदा व्यसनिनस्तत्स्थानसंमार्गणे ।
एवं सत्यपि साध्यसाधनयुगं सम्यङ्ग न जानन्ति ते
न प्राप्ता अधुनापि सौख्यपदवीं स्वाभीष्टरूपां यतः ।।१।।

तत्प्राप्त्यै प्रभुसंमितापि कृपया त्रय्यन्तसारान्विता
वल्ली काठकमध्यगा कविसमं प्रोत्साहयन्ती नरान् ।
एवं साधनकल्पनां रचयते सन्मार्गगानां सतां
तद्विष्णोः परमं पदं च सहसा गन्तुं मनीषावताम् ।।२।।

आत्मानं रथिनं ब्रवीति निगमो बुद्धिं च तत्सारथिं
देहं स्यन्दनमिन्द्रियाणि तुरगान् शब्दादि तद्गोचरम् ।
चेतः प्रग्रहमादरेण य इमान् वश्यांस्तनोत्यात्मवान्
तस्यैवाप्यमिदं पदं सुखघनं पारं परं ह्यध्वनः ।।३।।

प्राप्यं तत्परमं सुखं हि मुनयो मोक्षं समाचक्षते
जीवेशानजगद्विशेषरहितं ज्ञानैकसाध्यं ध्रुवम् ।
येनात्मन्यतिरोहितः स्वमहिमानन्दात्मको भासते
मिथ्याध्यासमतिश्च येन गलति ज्ञानं तदेवामलम् ।।४।।

आस्तिक्यं दृढमूलमेव मनुजः सम्पादयत्वादितः
कर्माचारयुतस्ततश्च भवतु स्वर्गादिभोगेच्छया ।
स्वर्गादावपि च क्रमेण गमितो नैराश्यमेवास्थिरे
नित्यानित्यविचारणे स्वधिकृतस्तत्त्वं समन्विच्छतु ।।५।।

ज्ञानाप्तेः परिपन्थिनौ किल मलो विक्षेपदोषस्तथा
चेतोनिष्ठमहारिपू प्रथमतश्चोन्मूलनीयौ यतः ।
कामं दूरमपास्य कर्मनिरतो मालिन्यरिक्तस्ततः
चित्तैकाग्र्यसुसिद्धये च भजतां निष्कामनोपासनम् ।।६।।

कर्मोपासनतो विशुद्धहृदयस्तत्त्वार्थसंसिद्धये
स्वाचार्यं परिचर्य शास्त्रविधिना तस्माच्च विद्यां पराम् ।
श्रुत्वा संशयनुत्तये च मननं स्थाम्ने निदिध्यासनम्
अभ्यस्य क्रमशः समाधिनिलयः प्राप्नोतु शान्तिं ध्रुवाम् ।।७।।

ब्रह्मज्ञोऽपि स वासनाक्षयमनोनाशौ विधाय क्रमात्
स्वात्मारामपरोऽनिशं सुखघनो मुक्तः स जीवन्नपि ।
प्रारब्धे क्षपिते च देहविलये मुक्तिं विदेहाङ्गतः
सच्चित्सौख्यमये ह्युपाधिरहिते मज्जत्वपारे परे ।।८।।

इत्थं वेदवचोभिरेव नियते मार्गे वयं यात्रिकाः
धर्माख्ये च सनातने कृतपदा वर्णाश्रमाचारिणः ।
गच्छामः क्रमशश्च मोक्षपदवीमानन्दरूपां यथा
श्रद्धाभक्तिमतस्तथा धृतियुतानस्मान् विदध्याद् गुरुः ।।९।।